च मंत्रवर्णः। अथेदानीं त्वच्छासने स्थितोऽस्मि गतसंदेहो मुक्तसंशयः। करिष्ये वचनं तव अहं त्वत्प्रसादात्कृतार्थो, न मम कर्तव्यमस्तीत्यभिप्रायः ॥७३॥

परिसमाप्तः। शास्त्रार्थः अथेदानीं कथासंबंधप्रदर्शनार्थं संजय उवाच—

संजय उवाच ।

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ॥
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥७४॥

इत्यहमिति। इत्येवमहं वासुदेवस्य पार्थस्य च महात्मनः संवादमिमं यथोक्तमश्रौषं श्रुतवानस्मि अद्भुतमत्यंतविस्मयकरं रोमहर्षणं रोमांचकरम् ॥७४॥

तं चेमम्—

व्यासप्रसादात् श्रुतवानिमं गुह्यतमं परम् ॥
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥७५॥

व्यासेति। व्यासप्रसादात् ततो दिव्यचक्षुर्लाभात् श्रुतवानिमं संवादं गुह्यतमं परं योगं, योगार्थत्वात् ग्रंथोऽपि योगः, संवादमिमं योगमेव वा योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयं न परंपरया ॥७५॥

राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ॥
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥७६॥

राजन्निति। हे राजन्धृतराष्ट्र, संस्मृत्य संस्मृत्य संवादमिममद्भुतं केशवार्जुनयोः पुण्यं इमं श्रवणादपि पापहरं श्रुत्वा हृष्यामि च मुहुर्मुहुः प्रतिक्षणम् ॥७६॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ॥
विस्मयो मे महान् राजन्हृष्यामि च पुनः पुनः ॥७७॥

तच्चेति। तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेर्विश्वरूपं विस्मयो मे महान् हे राजन्, हृष्यामि च पुनः पुनः ॥७७॥

किं बहुना—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः ॥१८॥

यत्रेति । यत्र यस्मिन्पक्षे योगेश्वरः सर्वयोगानामीश्वरः तत्प्रभवत्वात्सर्वयोगबीजस्य, कृष्णो, यत्र पार्थो यस्मिन्पक्षे धनुर्धरो गाण्डीवधन्वा, तत्र श्रीस्तस्मिन्पांडवानां पक्षे विजयः तत्रैव भूतिः श्रियो विशेषो विस्तारो भूतिः ध्रुवा अव्यभिचारिणी नीतिर्नयः; इत्येवं मतिर्ममेति ॥७८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः ॥१८॥

## इति श्रीमद्भगवद्गीताशास्त्रं समाप्तम् ।

## श्रीमद्भगवद्गीताश्लोकाद्यचरणप्रतीकवर्णानुक्रमः।

| | रु. आ. |
|---|---|
| योगवासिष्ठं वासिष्ठमहारामायणतात्पर्यप्रकाशव्याख्यायुतम् | १०– ० |
| वाल्मीकिरामायणम् | ३– ० |
| वेदान्तसारः | १– ० |
| साहित्यदर्पणम् | ३– ० |
| सुभाषितरत्नभांडागारम् | ३– ८ |
| स्तोत्ररत्नाकरः १८० स्तोत्राणि | ०–१० |
| स्तोत्रसंग्रहः ४०० स्तोत्राणि | १– ० |
| स्वप्नवासवदत्तं भासकविप्रणीतं नाटकम् | ०– ४ |
| शाकुंतलं कालिदासस्य with English Translation and Notes by Prof. P. N. Patankar M. A. | २– ० |
| शिवगीता बालानंदिनीव्याख्यायुता | ०– ८ |